क्षिप्त्वेति ।

दुर्गेति भद्रकालीति विजया वैष्णवीति च ।
कीर्त्यते शक्तिरेकैव कार्यार्थमवतारतः ॥ ३७ ॥

कालीं कालाम्बुदनिभरुचिं (त्वां?तां) सकृत् तत्र नत्वा
प्राप्तासि त्वं प्रथितमहसः कालिदासस्य कीर्त्तिम् ।
सूक्तिज्योत्स्नास्रुतिविततिभिः स्वर्धुनीस्पर्धिनीभिः
श्राव्यं काव्यं भुवि रचयतां मातृका यत्प्रबन्धाः ॥ ३८ ॥

कालीमिति ।

किञ्चिन्निमित्तमाश्रित्य कालिदासं महाकविम्
उपश्लोकयितुं प्राह कविः श्लोकं सुबोधकम् ॥ ३८ ॥

ऊर्ध्वं नाभिं करणविधिना तालु सन्धाय चाधो
यत्र प्राणैर्विरचितचतुष्पीठवेधप्रकाराः ।
प्रत्याहर्तुं हुतवहमुखादिन्दुपीयूषधारां
प्रत्याहाराभ्यसनविधिना योगिनोऽन्तर्यतन्ते ॥ ३९ ॥

ऊर्ध्वं नाभिमिति ।

तालुमूलस्थितश्चन्द्रो नाभिमध्ये दिवाकरः ।
अमृतं चन्द्रविम्बस्थं विषं सूर्ये प्रतिष्ठितम् ॥
वर्षत्यधोमुखश्चन्द्रो ग्रसत्यूर्ध्वमुखो रविः ।
यत् प्रत्याहरणं तस्य प्रत्याहारः स उच्यते ॥
समहस्तयुगो भूमौ समपादयुगस्तथा ।
वेधयेत् क्रमयोगेन चतुष्पीठं तु वायुना ॥ ३९ ॥

प्राप्यं तस्मादुपरि पुरुषैः पूर्णपुण्यैर्भजेथाः
स्थानं सिद्धैर्विनतममलं पूर्णगिर्यालयं तत् ।
देवी दद्यात् तदनु भवते मङ्गलं मङ्गलाम्बा
सिद्धिं दिव्यौषधरसवशीकारसिद्धाञ्जनानाम् ॥ ४० ॥

१. 'त्वं' ख. पाठः. २. 'ता' क. पाठः. ३. 'रु' ख. पाठ. ४. 'रा' ५. 'गे तथा' क. पाठः. ६. 'लं वा सि' ख. पाठः.

प्राप्यमिति ।

अनाहताख्यमाधारं पीठं पूर्णगिरिं विदुः ।
मङ्गलानि प्रदद्यात् ते संस्मृता सर्वमङ्गला ॥ ४० ॥

स्थाने तस्मिन् हृदयकमलं बोधयन् सारथिस्त्वं
जीवादित्यं समुपचर मां शार्ङ्गधन्वेव पार्थम् ।
योऽसौ सप्तस्वरहययुते स्यन्दनेऽनाहतेऽस्मि-
न्नेकं चक्रं वसति घटयन् द्वादशारं त्रिनाभि ॥ ४१ ॥

स्थाने तस्मिन्निति ।

प्रभाते बोधयन् पद्ममादित्यस्य यथारुणः ।
सारथ्यं कुरुते तद्वत् त्वं स्या जीवस्य सारथिः ॥

मन्देहप्रमुखैर्दैत्यैर्नामतश्चाप्यनाहते ।
अश्वैरिव स्वरैर्युक्ते जीवादित्यो विराजते ॥

आयुःप्रदायकं जन्तोः कालचक्रं प्रवर्तयन् ।
भवद्भूतभविष्यद्भिरंशैः कल्पितनाभिकम् ॥
अरैरिव द्वादशभिर्मासैः संवत्सरात्मकम् ।
अनाहताधारपद्मं दलैर्द्वादशभिर्युतम् ॥
तस्य तेजस्त्रयं नाभिर्गुरुत्रयसमन्वितम् ॥ ४१ ॥

त्वय्येवैष स्फुरति बहुधा आधया तारतम्याद्
यत्सान्निध्याच्चलसि विषयेष्विन्द्रियैः सार्धमन्यैः ।
अध्यारोप्य भ्रम(ति ? सि) च गुणांस्तद्गतान् निर्गुणः स-
न्नप्सु स्थायी चल इति यथा तद्गुणो दृश्यतेऽर्कः ॥ ४२ ॥

त्वयीति ।

देवतिर्यङ्मनुष्यात्मा तत्तन्मनसि भासते ।
मनोधर्मं च देवोऽहमित्याद्यात्मनि कल्पयन् ॥ ४२ ॥

१. 'थ', २. 'ह' क. पाठः. ३. 'भिम् ॥', ४. 'येत् प' ख. पाठः, ५. 'य', ६. 'ग' क. पाठः. ७. 'यैत्तजी', ८. 'भिः स्मृ', ९. 'भिगुणत्र' ख. पाठः,

मन्युं बुद्ध्या स्वधितिशितयालभ्य हृदूपबद्धं
पीत्वा सोमाद् गलितममृतं संविदग्नौ च हुत्वा ।
अन्तर्यागं यदि वितनुयाच्छ्रद्धया जीवयज्वा
सार्धं ज्ञानेन्द्रियपरिकरैस्त्वं भवाध्वर्युरस्य ॥ ४३ ॥

मन्युमिति ।

श्रद्धा पत्नी पशुर्मन्युः शस्त्रं स्वधितिरुच्यते ।
आग्नीध्राद्याः परिकराः सोमो वल्ली निशाकरः ॥ ४३ ॥

आलभ्यास्मिन्नधिकमधुरं सौम्य ! सौषुम्नवंशं
गोभिः श्लिष्टः सपदि विषये शाड्वले निःस्पृहाभिः ।
मायानीलाम्बरपरिवृतं ह्लादयंस्त्वं पुमांसं
नादं कुर्वन्ननुकुरु सखे ! गोपवेषं मुकुन्दम् ॥ ४४ ॥

आलभ्येति ।

आत्मनः परितोषार्थमन्तर्नामाभ्युदीरयन् ।
वेणुनादं यथा कृष्णो विधत्ते रामतोषकम् ॥ ४४ ॥

नूनं तस्मिन् हृदयकमलालाबुकोद्भासमानं
वीणादण्डं कमपि कलयन् ससतन्त्रीमनोज्ञम् ।
नामोंकारश्रुतिगतिवशान्नन्दिताशेषलोकं
नादं कृत्वा त्वमपि भविता नारदप्रेक्षणीयः ॥ ४५ ॥

नूनमिति ।

मन्द्रमध्यमतारेषु त्रिषु स्थानेषु तारणी ।
स्वर्यारोह्यवरोह्याद्यां श्रुतीनां गतिरुच्यते ॥ ४५ ॥

नानारूपान् निजसमुदितान् दर्शयन् जातिभेदां-
स्तस्मिन् नादः क्षपणकसमः सप्तभङ्गीं भजेत् सः ।

---

१. 'य त्वं पु', २. 'रामं गच्छन्ननु मम स', ३. 'षो', ४. 'न्दः', ५. 'दा' ख. पाठः, ६. 'दः', ७. 'द्याः' क. पाठः.

यस्मिन् कर्माष्टकनियमितः संवृते पञ्जरेऽस्मिन्
भिन्ने जीवः शुक इव सदा यात्यलोकान्तरिक्षम् ॥ ४६ ॥

नानारूपानिति ।

शुद्धसालगसङ्कीर्णरागाणां मिश्रणोद्भवाः ।
आहुर्भरतशास्त्रज्ञा जातीरष्टादशात्मिकाः ॥
षड्जर्षभौ च गान्धारौ मध्यमः पञ्चमस्तथा ।
धैवतश्च निषादश्च स्वराः सप्त प्रकीर्तिताः ॥
घण्टादुन्दुभिशङ्खाब्धिवेणुवीणालिसन्निभाः ।
कम्पितः स्फुरितो लीनस्त्रिभिन्नस्त्रिरिपुस्तथा ॥
आन्दोलिताहतौ स्थायीत्यष्टौ कर्माणि गायताम् ।
यमश्च नियमः पश्चादासनं प्राणसंयमः ॥
प्रत्याहारो धारणा च समाधिर्ध्यानमष्टमम् ।
श्रुत्याकारशरीरत्वं ब्रह्मणस्तूपदृश्यते ॥
ब्रह्मप्राप्तिं च जीवस्य मोक्षमाहुर्मनीषिणः ।
सप्तार्हतानां तत्त्वानि जीवोऽजीवस्तथास्रवः ॥
संवृतिर्निर्जरा बन्धो मोक्षः सप्तम उच्यते ।
जीवः प्रकाशी शुद्धः स्यादजीवस्तद्विलक्षणः ॥
आस्रवन्ति यतो धर्माः स स्यादास्रव आगमः ।
यया संव्रियते जीवस्तां मायां संवृतिं विदुः ॥
निर्जीर्यते यया कर्म निर्जरा व्रतधारणा ।
केशानां लुञ्छनं तप्तशिलारोहणमित्यपि ॥
स्वपञ्चमलधारित्वमित्याद्या व्रतधारणा ।
कर्माष्टकसमारब्धे शुकपञ्जरसन्निभे ॥
पुंसो देहे स्थितिर्बन्धः शुकस्येव स्वपञ्जरे ।
सततोर्ध्वगतिर्मोक्ष आकाशे चोपरिस्थिते ॥
कालः पञ्चास्तिकायाश्च षट् तत्त्वानीति केचन ।
जीवः पुद्गल आकाशो धर्मोऽधर्मोऽस्तिकालकः ॥

स्यादस्ति विश्वं स्यान्नास्ति पुनः स्यादस्तिनास्ति च ।
स्यादवक्तव्यमित्येवं चतस्रो भङ्गच ईरिताः ॥
स्यादस्त्यवक्तव्यं च स्यान्नास्त्यवक्तव्यमित्यपि ।
स्यादस्ति नास्त्यवक्तव्यमिति स्युः सप्त भङ्गयः ॥
कथञ्चिच्छब्दपर्यायः स्याच्छब्द इति बुध्यताम् ।
प्राग्ज्ञानावरणीयं च दर्शनावरणीयकम् ॥
आन्तरायिकमायुष्कं नामिकं गौत्रिकं तथा ।
मोहनीयं वेदनीयमिति कर्माष्टकं विदुः ॥
अनेकान्तात्मकत्वस्य ग्राहकं ज्ञानमुच्यते ।
ज्ञानमाव्रियते ज्ञानावरणीयेन कर्मणा ॥
दर्शनावरणीयं तु यत्तज् ज्ञाननिवारकम् ।
क्रियते श्रेयसे विघ्न आन्तरायिककर्मणा ॥
आयुरल्पं महद्वा स्यादायुष्केणैव कर्मणा ।
नामानि भद्राभद्राणि प्राप्यन्ते नामिकेन च ॥
वंशा उच्चावचाः पुंभिर्लक्ष्यन्ते गौत्रिकेन च ।
हिताहितं न जानन्ति मोहनीयेन जन्तवः ॥
सुखं दुःखं च वेद्येते वेदनीयेन कर्मणा ।
एभिरुच्चावचानि स्युः पुद्गलानि शरीरिणः ॥
पूर्यते गलतीत्याभ्यां शरीरं पुद्गलं विदुः ॥ ४६ ॥

देशं जालन्धरमथ विशंस्तत्र विश्रम्य किञ्चित्
सिद्धैः सेव्यां तदनु गहने खेचरीं प्राप्य वृत्तिम् ।
नत्वा देवं त्रिभुवनगुरुं लम्बिकायां निषण्णं
भ्रूमध्ये त्वं वस शुचिरिव त्र्यम्बकस्यालिकाक्षिण ॥ ४७ ॥

देशं जालन्धरमिति ।

विशुद्धिसंज्ञमाधारं देशं जालन्धरं विदुः ।
पञ्चाशद्वर्णरूपा वाग् वर्तते यत्र वैखरी ॥

१. 'पीठं ज्ञा' ख. पाठः. २. 'वा व' क. पाठः.

कपालकुहरे जिह्वा प्रविष्टा विपरीतगा ।
भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥

न क्षुधा न तृषा निद्रा नालस्यमुपजायते ।
भवेत् स्वच्छन्दमृत्युश्च यो मुद्रां वेत्ति खेचरीम् ॥

अजागलस्तन इव या तालुन्यवलम्बते ।
आस्तेऽस्याममृतप्लावी लम्बिकायां त्रियम्बकः ।
आज्ञासंज्ञं भ्रुवोर्मध्ये विदुराधारमुत्तमम् ॥

तस्मिन् स्वायम्भुवं लिङ्गं बिन्दुरूपं प्रकाशते ।
ओड्याणपीठमाब्रह्मरन्ध्रमाहुरतः परम् ॥ ४७ ॥

कैलासाख्यं तदुपरि पुनः कोटिचन्द्रप्रतीक्ष्यं
स्थानं गत्वा विहर सुचिरं स्वेच्छया स्वच्छवृत्तिः ।
शम्भोर्नित्यं विहितवसतेस्तत्र मौलीन्दुरेखा-
ज्योत्स्नाधारापरिचयवशाद् यापयन्नध्वखेदम् ॥ ४८ ॥

कैलासाख्यमिति ।

घनीभूतघृताकारं यन्मस्तिष्कं शिरोगतम् ।
केचित् तदमृतं प्राहुः केचिल्लालाजलं विदुः ॥ ४८ ॥

स्थित्वा तस्मिन् प्रियसख! चिरं निर्मलज्ञानरूपे
दृश्यं स्वप्नप्रतिनिधि जडं नेति नेति व्यपोह्य ।
त्यक्त्वा पिण्डं तदुपरि पदं तत्परस्ताच्च रूपं
रूपातीते विहर परमे व्योम्नि निस्सीमभूम्नि ॥ ४९ ॥

स्थित्वा तस्मिन्निति ।

देहेन्द्रियमनःप्राणबुद्ध्यहङ्कारसञ्चयम् ।
देहं दृश्यं जडं स्वप्नतुल्यं नाहमिति त्यज ॥

पिण्डं कुण्डलिनी शक्तिः परहंसः प्रकीर्तितः ।
नादो रूपमिति प्रोक्तो रूपातीतः परः शिवः ॥ ४९ ॥

१. 'लं' ख. पाठः.

देशे तस्मिन् सकलजगतां सौम्य! विश्रान्तिभूमिः
शम्भोर्लोकः शिशिरकिरणश्लिष्टसौधप्रवाहम्[1] ।
यस्मिन् भक्तिर्निवसति मम प्रेयसी तं प्रपन्नं
द्रक्ष्यस्यच्छस्फटिकधवलं द्वादशान्तेऽतिशान्ते ॥ ५० ॥

देशे तस्मिन्निति ।

स्वरूपं लोकशब्दोक्तं[2] तत्त्वानामवलोकनात् ।
श्लेषेण पुण्यलोकश्च ध्वन्यते भोगमोक्षदः ॥
चन्द्रामृतमयं स्रोतः सौधमित्यभिधीयते ।
प्रासादोऽपिच तुङ्गत्वादिन्दुबिम्बावलम्बनम्[3] ॥ ५० ॥

इति हंससन्देशे सव्याख्ये पूर्वसन्देश समाप्तः ॥

---

१. 'तत्' ख. पाठः. २. 'शब्दलोकोक्तं' क. पाठः. ३. 'नः' ख. पाठः.

अथोत्तरसन्देशः ।

शक्तियोगः शरीरान्तः संक्षिप्तः सकलोऽमितः ।
शाम्भवो निष्कलो योगः शरीरोपरि सूच्यते ॥

ब्रह्माण्डं[1] तद्गतमपि ततश्चोर्ध्वसम्भोग्निवायु-
व्योमान्येषां विकृतिवितर्तीस्तत्प्रधानं पुमांसम् ।
मायाविद्ये सविधिसमये बिन्दुनादौ च शक्तिं
पूर्वं पूर्वं दशशतगुणान् व्यापकान् व्याप्य भान्तम् ॥१॥

ब्रह्माण्डमिति ।

व्यवधातुमशक्यत्वाद् विस्तीर्णत्वात् समन्ततः ।
अन्तर्बहिरपि व्याप्तमाब्रह्माण्डपिपीलिकम् ॥ १ ॥

विश्वस्रष्टा विधिरपि पुरा द्रष्टुकामो यदन्तं
हंसाकारश्चिरमुपरि चोड्डीय नाभूत् समर्थः ।
आदिं तद्वत् प्रलयजलधौ क्लृप्तकेलिर्वराहो
यद्दंष्ट्राग्रे क्षितिरियमभूत् पङ्कलेशप्रतीक्ष्या ॥ २ ॥

विश्वस्रष्टेति ।

हरिर्ब्रह्मा च यस्यान्तं नालमास्तां निरीक्षितुम् ।
तस्येयत्तां परिच्छेत्तुं कः क्षमेताल्पधीर्जनः ॥ २ ॥

निस्त्रैगुण्ये निखिलदुरितक्लेशविच्छेदहेतौ
नित्यानन्दोल्लसितविभवे निष्कले निर्विकल्पे ।
निर्धूतांहस्तिमिरपटले निर्मलज्ञानरूपे
यस्मिन् प्राप्ते न खलु पुनरावर्तते जीवलोकः ॥ ३ ॥

निस्त्रैगुण्य इति ।

स्वर्गाद्या ब्रह्मलोकान्ता याः प्रोक्ता भोगभूमयः ।
भोगे भुक्ते भवन्त्येताः पुनर्जननहेतवः ॥ ३ ॥

यत्राबुद्धे स्फुरति बहुधा क्षुद्रविश्वेन्द्रजालं
मूकस्वप्नप्रतिनिधि जगद् यत्र बुद्धेऽस्तमेति ।

१. 'ब्रह्मान्तर्गत', २. 'यि', ३. [illegible] पाठः

ध्यानारूढैः कथमपि धिया योगिभिर्गम्यमानं
न व्याहर्तुं निगमवचसो वैभवं यस्य शक्ताः ॥ ४ ॥

यत्राबुद्ध इति ।

लोकावगतसामर्थ्यः[1] शब्दो वेदेऽपि बोधकः[2] ।
लौकिकैर्गृह्यते शब्दैः सङ्गतिर्न[3] निरंशके[4] ॥ ४ ॥

तत्त्वान्यादौ त्रिभुवनसृजो यस्य षट्त्रिंशदासन्
यस्मिन्नेतान्यथ च भुवनान्युद्गतानि द्विसप्त ।
वर्णा यस्मिन् वशषसमुखाः किञ्च पञ्चाशदासन्
यत्रानन्तं पदमुदभवन्मन्त्रजालस्य मूलम् ॥ ५ ॥

तत्त्वान्यादाविति ।

इदमित्थमिति ज्ञातुं[5] निरंशत्वान्न शक्यते ।
तथापि लक्ष्यते[6] युक्त्या तत्त्वानां प्रभवत्वतः ॥ ५ ॥

शोचिष्केशः शिशिरकिरणो भानुमाली च यस्मिन्
सर्वोत्कृष्टे स्वमहसि दिवादीपसाम्यं भजन्ति ।
भासा यस्य त्रिभुवनगृहाभ्यन्तरं भासयन्ते
भानोर्यद्वत् प्रतिफलनतो दर्पणं गह्वराणि ॥ ६ ॥

शोचिष्केश इति ।

स्वयम्प्रकाशं तद्वस्तु प्रकाशैर्न प्रकाश्यते ।
प्रकाशास्तत्प्रकाशेन प्रकाशन्ते प्रकाशिताः ॥ ६ ॥

यस्मिन् दृष्टे त्रिभुवनमसत् सच्च यस्मिन्नदृष्टे
यश्चालम्बः सकलजगतां यो निरालम्बनश्च ।
विश्वस्यादिर्य इह न पुनर्विद्यते यस्य चादि-
स्तद्भूमानं क इव भुवने स्युः परिच्छेत्तुमीशाः ॥ ७ ॥

यस्मिन् दृष्ट इति ।

अस्ति नास्तीति वा वक्तुं यद् वाचामवलम्बनम् ।
तच्चेन्नास्ति कथं वाचां प्रवृत्तिः सम्भविष्यति ॥ ७ ॥

---

१. 'र्थ्य', २. 'धितः।', ३. 'ङ्ग', ४. 'कः' क. पाठः. ५. 'तुमिदंश' ख. पाठः. ६. 'व' क. पाठः.

चन्द्रादित्याद्यविदितमपि प्रेक्षसे सर्वगस्त्वं
सोऽयं लोकः सकलभुवनव्यापकः शङ्करस्य ।
अन्तर्यामी त्वमपि जगतां सोऽपि तस्मादवश्यं
सादृश्यं ते प्रथयतितरां यस्तु तैस्तैर्विशेषैः ॥ ८ ॥

चन्द्रादित्याद्यविदितमिति ।

लोकालोकाद्रिपर्यन्तः प्रकाशश्चन्द्रसूर्ययोः ।
हे मनस्त्वमिहस्थोऽपि ततः परमपीक्षसे ॥ ८ ॥

सत्यं ज्ञानं सकलभुवनाधारमाधारशून्यं
सन्तं सूक्ष्मं निरुपममजं निर्विकारं निरीहम् ।
शुद्धं शान्तं निरुपमरुचिं स्वच्छमानन्दरूपं
व्याप्ताशेषं विगतकलुषं त्वां तमेव स्मरामि ॥ ९ ॥

सत्यमिति ।

सन्देशशेषं निर्वोढुं काङ्क्षता कविना पुनः ।
किञ्चित् साम्यं समाश्रित्य तत्त्वेन सह रूप्यते ॥ ९ ॥

तस्मिंश्चान्द्रं विलसति चिरं मण्डलं नित्यपूर्णं
यन्निष्यन्दामृतपरिगता दीर्घिका दीर्घमास्ते ।
आप्लुत्यास्यामपनय चिराद्ध्वखेदं सखे! त्वं
पीत्वा मृत्युं तरति सहसा पूरुषो यत्र बिन्दुम् ॥ १० ॥

तस्मिन्निति ।

पूर्णेन्दुबिम्बनिष्यन्दिपीयूषरसधारया ।
पूर्णं पद्माकरं ध्यायेद् भावनामात्रगोचरम् ॥ १० ॥

तस्मिन् संवित्सरसिजमथो सप्तकोटिच्छदाढ्यं
द्रक्ष्यस्यन्तर्विलसितकलारूपकिञ्जल्कयुक्तम् ।
मध्ये यस्य स्फुरति महती कर्णिका स्वर्णरूपा
यन्निष्यन्दामृतमिह मुहुस्त्वादृशाः प्रार्थयन्ते ॥ ११ ॥

तस्मिन् संविदिति ।

सप्तकोटिमहामन्त्रा दलास्तद्देवताः कलाः ।
प्रणवः शोभनो वर्णः स्वर्णशब्देन कीर्त्यते ॥ ११ ॥

---

१. 'य', २. 'कं दीपयन्तः', ३. 'शा', ४. 'का' ख. पाठः. ५. 'य' क. पाठः. ६. 'सवमि' ख. पाठः. ७. 'मुद्राद' क. पाठः. ८. 'कथ्यते' ख. पाठः.

सत्ता यस्य स्थिरपरिमलः केसरा नादरूपाः[1]
स्फूर्तिर्विद्यास्फुरणमणवो रेणवोऽत्यन्तसूक्ष्माः ।
पद्मे तस्मिन् परमरसवत्कर्णिकाबिन्दुपीठे
स्वैरं भृङ्गाविव विहरतो दम्पती तौ पुराणौ ॥ १२ ॥

सत्तेति ।

स्फूर्तिर्विकासो विद्येति मालमन्त्रः प्रकीर्त्यते ।
अर्णवस्तूपमन्त्राः[2] स्युरानन्दः परमो रसः ॥ १२ ॥

द्रक्ष्यस्यन्तःपुरमपि परं शाङ्करं दैवयोगाद्
यत्प्राकारास्त्रय इह मतिप्राणदेहा भवन्ति ।
द्वारेष्वस्य प्रियसख! भज त्वं निवृत्तिं प्रतिष्ठां
विद्यां शान्तिं तदनु च कलामूर्ध्वगां शान्त्यतीताम् ॥

द्रक्ष्यस्यन्तःपुरमिति ।

प्राकाराः स्युस्त्रयः कोशा अन्नप्राणमनोमयाः ।
स्याद् विज्ञानमयः शक्तिरानन्दमय ईश्वरः ॥ १३ ॥

या सा तस्मिन् निवसति परा पञ्चवक्त्रा कलाभि-
र्मूलान्नीता प्रसभमपरा त्वं तया योजयाशु ।
शक्तिश्चासौ तदनु यमुनासङ्गता जाह्नवीव
ज्ञानाम्भोधिं शिवमभिविशेत् तत्र कारुण्यपूर्णम् ॥१४॥

या सा तस्मिन्निति ।

सावित्र्युद्ध्रियते मन्त्रः पराख्यो बिन्दुसंयुतः ।
एतन्मन्त्रप्रभावेन जायते मनसो लयः ॥ १४ ॥

प्रासादेऽस्मिन् भज पशुपतिं पञ्चकोशप्रकाशे
पञ्चब्रह्मस्फुरणविलसत्पञ्चवक्त्रं प्रसन्नम् ।
ओङ्काराख्ये विहितवसतिं सर्वदा वर्णपीठे
हाहाहूहूस्तुतिषु मुदितं देवमौदार्यशीलम् ॥ १५ ॥

प्रासादेऽस्मिन्निति ।

प्राकारमन्त्रस्योद्धारो[3] हकारोकारबिन्दुभिः ।
सौधस्थलं[4] च प्राकारो विहारगृहमीशयोः ॥

---

१. 'नन्दरूपा स्फु' ख. पाठः. २. 'वर्णस्तू' क. पाठः. ३. 'सादम', ४. 'पञ्च-प्रासादो वि' ख. पाठः.

अतः परं प्रसन्नार्थो ग्रन्थशेषोऽतिकोमलः ।
स्तूयते मनसः स्थित्यै सगुणं ब्रह्म केवलम् ॥ १५ ॥

ईशानं तत्पुरुषमुपरिद्वारि पूर्वे च नत्वा
दक्षे[1]ऽघोरं दलितदुरितं वामतो वामदेवम् ।
सद्योजातं भज चरमतः पूर्वतो नन्दिकेशं
मूर्तां गङ्गामपि च यमुनां श्रीमहाकालदेवम् ॥ १६ ॥

ईशानमिति ।

पञ्चब्रह्मतनोरंशाः पञ्चभूताधिदेवताः ।
पञ्चकृत्यविधातारः प्रासादस्य प्रवेशकाः ॥ १६ ॥

सान्द्रानन्दामृतजलनिधौ धर्मकामार्थवीच्यां
तत्त्वद्वीपे विविधभुवनोद्यानविद्योतमाने ।
वर्णैः कीर्णे सुरविटपिभिर्मण्डपे मन्त्ररूपे
शक्त्या साकं विहरति शिवः श्रेयसामेष दाता ॥ १७ ॥

सान्द्रानन्देति ।

कथञ्चिदालम्बयितुं मनो निरवलम्बनम् ।
लक्षणैर्लोकसंसिद्धैर्लक्ष्यते वस्तु लौकिकम् ॥ १७ ॥

देवैः सिद्धैर्मुनिभिरभितः किन्नरैरप्सरोभिः
सङ्गीताद्यैर्बहुसुखरसैः सेव्यमानो विनोदैः ।
अष्टैश्वर्यस्फुरणमहितोऽप्यष्टमूर्तिर्नितान्तं
गौरीगात्रव्यतिकरभुवा रोचिषा रोचतेऽसौ ॥ १८ ॥

देवैरिति ।

तिष्ठन्त्वनन्यसामान्याः सर्वज्ञत्वादयो गुणाः ।
अनन्तशक्तिम(त्वं ? त्त्वं) यत् तद्धि वैभवमैश्वरम् ॥ १८ ॥

मौलौ कुन्दोल्लसितमलकं सेन्दुलेशं कपर्दं
काश्मीराङ्कं तिलकमलिके लोचनं सस्फुलिङ्गम् ।
कण्ठे कालागरुमपि च यः कालकूटं च धत्ते
क्षौमं कृत्तिं जघनपुलिने नूपुरं व्यालमङ्घ्रौ ॥ १९ ॥



१. 'दा' ख. पाठः. २. 'प', ३. 'णैः', ४. 'कैः ॥', ५. 'पनः का' क. पाठः.

मौलाविति ।

परस्परविभिन्नार्थक्रियालक्षणयोरपि ।
अनन्तशक्तेरीशस्य प्रभावादैक्यमिष्यते ॥

एकलक्षणयोरैक्यं सच्चिदानन्दरूपयोः ।
को निवारयितुं शक्तो जीवात्मपरमात्मनोः ॥ १९ ॥

मार्कण्डेयो मुनिरिव विभोस्तस्य कृत्वा सपर्यां
तत्कारुण्यादतितर सखे! मृत्युमत्युग्ररूपम् ।
पातुं लोकान् जलधिमथने यः पिबन् कालकूटं
वीतक्लेशो व्यतरदमृतं देवतानां पुरस्तात् ॥ २० ॥

मार्कण्डेय इति ।

निर्विकल्पे समाधौ त्वं कदाचिच्छ्राम्यसे यदि ।
कालशेषं क्षपयितुं सपर्यां कुरु शाङ्करीम् ॥ २० ॥

ज्ञानं नेत्रं हरिरिव दिशन् कालचक्रं जयी स्याः
क्षेमं लङ्केश्वर इव भजे प्राणवक्रोपहारैः ।
तातं चण्डेश्वर इव महामोहमुन्मूल्य सद्यः
सङ्कल्पं वा भिषगिव सुतं लप्स्यसे तत्पदं त्वम् ॥२१॥

ज्ञानमिति ।

ज्ञानज्ञेयादयो भावास्त्वयि निश्चिन्ततां गते ।
स्वयमेव विलीयेरन् ब्रह्म सम्पद्यते तदा ॥ २१ ॥

अश्माघातैरुपचरितवान् यं पुरा कोऽपि भक्तो
गण्डूषाम्भःपृषतनिकरैरभ्यषिञ्चत् परो यम् ।
आनर्चान्यः शिरसि धनुषस्ताडनैः श्रेयसे यं
कामान् दास्यत्ययमभिमतांस्तेऽपि सोढापराधः ॥ २२ ॥

अश्माघातैरिति ।

कृत्याकृत्याविकल्पेन न तुष्यति महेश्वरः ।
केवलं तोषयेदीशं भक्तिभावानिबन्धना ॥ २२ ॥

१. 'कं', २. 'योऽपिवत् क्का', ३. '[illegible]', ४. 'जन्', ५. 'तश्चण्डे' क. पाठः. ६. 'लयन् यः' ख. पाठः. ७. 'नं' क. पाठः.

आराध्येशं विरचितनतिस्तस्य पादारविन्दे[1]
तत्र श्रद्धामनितरगतिं त्वात्प्रियां श्लाघमानः ।
लौल्यं त्यक्त्वा प्रियसख ! चिरासादितायाममुष्या-
मन्यासङ्गं परिहरसि चेत् खण्डिता नैव सा स्यात् ॥२३॥

आराध्येशमिति ।

श्रीपादपङ्कजे नित्यं श्रद्धामव्याहतां कुरु ।
बहिर्विषयलौल्येन न तां क्षणमपि त्यज ॥
वल्लभस्यान्यया सङ्गे परिज्ञाते कथञ्चन ।
ईर्ष्यापराङ्मुखी योषित् खण्डितेत्यभिधीयते ॥ २३ ॥

नून शम्भोश्चरणवसतिं ब्रह्मविद्यास्वरूपां[2]
भक्तिं ज्ञास्यस्यधिकविशदां शाश्वतज्ञानगर्भाम् ।
वाल्मीकीये जनकतनयां लक्ष्मणस्यानुजन्मा
पुण्यारण्ये लवणनिधनाभ्युद्यतो यद्वदग्रे ॥ २४ ॥

नूनमिति ।

भक्त्यैवोत्पद्यते शुद्धं स्वरूपज्ञानमैश्वरम् ।
ज्ञानादेव भवेन्मोक्षो न दानेन न चेज्यया ॥ २४ ॥

या सा वाचि प्रकृतिमधुरा या च चित्ते[3] दयालु-
र्या वा नम्रा वपुषि विनयाद् या च नेत्रे प्रसन्ना ।
सा(ध्यों ? ध्व्या)स्तस्याः किमिह बहुभिर्वर्णनानां प्रकारैः
सैषा काचित् सरसिजभुवो मानसी सृष्टिरन्या ॥ २५ ॥

या सा वाचीति ।

निराकारतया वक्तुं लक्षणं नैव शक्यते ।
भक्तस्य लक्षणैरेव तस्माद् भक्तिश्च लक्ष्यते ॥
स्ववल्लभायाः सौभाग्यं सौशील्यादीन् गुणानपि ।
विप्रयुक्तः स्वमित्राय वदतीत्यपि बुध्यते ॥ २५ ॥

---

१. 'तिस्त्वत्प्रि', २. 'सवित्रीं भ' क. पाठः. ३. 'वि' ख. पाठः. ४. 'ध्यां' क. पाठः.

काश्र्यं यायात् खलु विधिवशात् प्रायशः साम्प्रतं सा
कालुष्यं वा मयि पुनरनाचारमाशङ्कमाना ।
शोचेत् किं वा प्रियसहचरी दुर्लभं मां विदित्वा
किं किं बालाः प्रियविरहिता नैव सञ्चिन्तयन्ति ॥ २६ ॥

काश्र्यं यायादिति ।

पुण्यपापप्रवृत्तश्चेत् पुमान् भक्तिः कृशा भवेत् ।
प्रविशेन्नास्तिकमतं यदि कालुष्यमाप्नुयात् ॥
साध्वी स्त्री विरहे पत्युः कार्श्यं यायाद्दिने दिने ।
सपत्नीसङ्गमाशङ्क्य कालुष्यं वा गमिष्यति ॥ २६ ॥

पृच्छेद्वासौ चिरमुपनिषच्छारिकामन्तिकस्थां
पुंसः किन्तु स्मरसि रसिके! त्वं हि तत्प्रेमपात्रम् ।
आत्मश्लाघा वरमिति न मे सौम्य! जानीहि वाक्यं
साक्षात्कर्तुं प्रभवति भवान् क्षिप्रमेवास्तुमर्थम् ॥ २७ ॥

पृच्छेदिति ।

श्रवणानन्दकारिण्या वाण्या श्रवणतत्परान् ।
आह्लादयन्त्युपनिषच्छारिकेत्यभिधीयते ॥
सिद्धार्थबोधकं वाक्यं नार्थवादो नच स्तुतिः ।
यत्प्रामाण्यबलात् तत्त्वं साक्षात्कुर्वन्ति साधवः ॥
आत्मानं सुभगं मत्वा सखे! त्वां न प्रकोपये ।
त्वमेव ज्ञास्यसि क्षिप्रमित्याह विरहातुरः ॥ २७ ॥

कुर्यात् सा चेच्चरणकमले दीर्घखेदापनुत्त्यै
चर्यां शम्भोः प्रथमकथितस्यार्धनारीश्वरस्य ।
त्वं चावश्यं कुरु करुणया तत्र किञ्चिद् विलम्बं
पश्चाद् वाणीं कथय सदयं मन्मुखेनोच्यमानाम् ॥ २८ ॥

कुर्यादिति ।

नहि भक्त्या विना भक्तः सपर्यायां प्रवर्तते ।
भक्तिः सपर्यां कुर्यादित्यस्माद्धेतोर्निगद्यते ॥ २८ ॥

१. 'ल', २. 'वा', ३. 'त्वा', ४. 'भक्त्या श्र' क. पाठः. ५. 'रा ।' ख. पाठः. ६. 'क्षिप्रवि' क. पाठः.

साकं शान्त्या यदि किल भवेत् सेयमेकान्तशीला
तन्निश्शङ्कां सपदि सहजा सानुकम्पां समेत्य ।
आर्ये! भर्तुस्तव सहचरश्चित्तसंज्ञोऽस्मि हंस-
स्तत्सन्देशादुपगत इहेत्येवमाचक्ष्व तस्यै ॥ २९ ॥

साकमिति ।

यस्माद् भक्ति विभर्त्येष तस्माद् भक्तेति कथ्यते ।
सम्यक् तत्त्वोपदेशोऽपि सन्देश इति बुध्यताम् ॥ २९ ॥

दूरे स्थित्वा स्वहृदयगतां संस्मरन् प्रेयसीं त्वां
भावानन्यान् नखलु पुरतो वर्तमानान् स वेत्ति ।
तीर्थक्षेत्रेष्वयमनुदिनं त्वन्निविष्टान्तरात्मा
शोचत्यार्ये! शिव शिव शिवेत्युद्गृणंस्त्वद्गुरुं च ॥

*भूयो भूय इति ।

कान्तया विप्रयुक्तत्वं क्वचिच्छोकस्य कारणम् ।
अन्यत्र भवजक्लेशपरिश्रान्तिरहर्निशम् ॥ ३० ॥

इत्युक्ते त्वय्यथ शिवकथाजालमालम्बमाना
ज्ञानाह्वानं सपदि नयनं साधु विस्फारयन्ती ।
प्रेक्षेत त्वां नलपरिसरादागतं राजहंसं
वैदर्भीव प्रियवचनतो भूयसा ह्लादयन्तम् ॥ ३१ ॥

इत्युक्त इति ।

भक्तिः शिवकथायुक्ता भूयो भूयो विवर्धते ।
निःश्रेयसं तवापि स्यात् तयोरेव समाश्रयात् ॥ ३१ ॥

जाताभिज्ञा तदनु सहजं सौम्य! युक्तोपचारां
स्वात्मस्थाने पशुपतिपदे सादरं सन्निवेश्य ।
आवेद्यास्मै भुवनपतये सा समाश्वासयेत् त्वा-
मानन्दाख्यैरमृतसलिलैरध्वखेदोपशान्त्यै ॥ ३२ ॥

१. 'यं' क. पाठः. २. 'पि', ३. 'संसारक्ले', ४. 'रं' ख. पाठः.

* 'भूयो भूयः स्वहृदय' इति व्याख्यासम्मतः पाठः स्यात् ।

जाताभिज्ञेति ।

चिरकालप्रमुषितं देहाद्यभिनिवेशतः ।
स्वरूपप्रत्यभिज्ञानं शिवभक्त्यैव सम्भवेत् ॥ ३२ ॥

विश्रान्तः सन् वद मम मुखात् त्वत्समानाकृतिः सन्
पश्याम्यार्ये! प्रकृतिमधुरां भावलग्नामहं त्वाम् ।
सूक्ष्मः सूक्ष्मादधिकविशदां भूयसैवावदातः
शान्तः शान्तामनितरगतिं त्वामनन्याश्रयश्च ॥ ३३ ॥

विश्रान्तः सन्निति ।

यं यं भावयते भावं सकलं वाथ निष्कलम् ।
तं तं भावमवाप्नोति भावनायाः प्रभावतः ॥ ३३ ॥

ब्रह्मा वाणीमिव निजमुखे लालयन् सानुरागं
पश्चाल्लक्ष्मीं हरिरिव हृदि श्लाघमानो निवेश्य ।
देहस्यार्धे शिव इव शिवां त्वामुपश्लोक्य पूर्वं
तांस्तान् भोगानभजमधुना सोऽस्मि दैवेन दूरे ॥ ३४ ॥

ब्रह्मेति ।

पूर्वमन्वभवं भोगान् भक्तिमाश्रित्य शाम्भवीम् ।
योगभ्रष्टो विधिवशात् संसरामि तया विना ॥ ३४ ॥

संविद्धातुद्रवमतितरां स्वच्छमासाद्य सद्यः
प्रज्ञासंज्ञामपि च फलकां तूलिकां ध्यानरूपाम् ।
शान्तां मूर्तिं तव विलिखितुं भावयाम्येष यावत्
तावद् वैरी नयनयुगलं बाष्पपूरो निरुन्धे ॥ ३५ ॥

संविद्धातुद्रवमिति ।

निराकारतया भक्तिर्बाह्यदृष्ट्या न लक्ष्यते ।
ज्ञानदृष्टिमवष्टभ्य प्रज्ञयैवानुभूयते ॥ ३५ ॥

योगीन्द्रेषु श्रवणमननध्यानशीलेषु नित्यं
मौनस्थेषु व्रतिषु यतिषु ब्रह्मविद्वत्सु सत्सु ।

१. 'तु' ख. पाठः,

भस्मच्छन्नेष्वपि च जटिलेष्वंशतस्त्वां विपश्यन्
पूर्णाकारां क्वचिदपि विभैवैर्भवान्नो लभे त्वाम् ॥ ३६ ॥

योगीन्द्रेष्विति ।

भक्तेः सम्पूर्णताभावादप्राप्तज्ञानवैभवाः ।
मुक्तये यतमानाश्च पुण्यानां भुञ्जते फलम् ॥

तथाहि भगवद्गीता —

"मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥"

इति ॥ ३६ ॥

एकान्ते त्वं[1] प्रणयभरितो निर्विशन्नेकदा तु
प्राप्तुं शम्भुं सपदि निभृतो यः पुरा संस्मृतोऽस्मि ।
अस्मादार्ये ! कुशलिनमभिज्ञानतो मां विदित्वा
त्वं चावश्यं भव कुशलिनी तत्पदं सेवमाना ॥ ३७ ॥

एकान्त इति ।

सकृत् प्रसक्तया भक्त्या विनष्टे सर्वकिल्बिषे ।
नाधः पतति पुण्यात्मा (ना ? प्रा)प्नोति सुकृतां गतिम् ॥

तथाहि भगवद्गीता —

"पार्थ ! नैवेह नामुत्र विनाशस्तस्य विद्यते ।
नहि कल्याणकृत् कश्चिद् दुर्गतिं तात ! गच्छति ॥"

इति ॥ ३७ ॥

नष्टो मायामृग इव खरो दूषणश्चैव पाप्मा
व्यामोहाय प्रसरति परं वासना राक्षसी मे ।
संसाराख्ये ननु विगलति स्वप्नरूपेऽन्धकारे
बोधादित्येऽप्युदितवति सत्यावयोः स्याद्धि योगः ॥ ३८ ॥

नष्टो मायामृग इति ।

प्रारब्धभोगपर्यन्तं भाति देहादिवासना ।
(भवेन्ना)र्थक्रियाकारिण्येषा स्याद् दग्धभस्मवत् ॥ ३८ ॥

---

१. '++स्थानेष्व', २. 'य' क. पाठः.

आश्लिष्य त्वामथ विभूणुयां स्नेहमानन्दसान्द्रं
कम्पैः स्वेदैरपि च पुलकैर्नेत्रयोर्मीलनेन ।
यत्संश्लेषे सति तु गुरुणा शङ्करेणाप्यभिन्नं
प्रेक्षिष्यन्ते ननु सुमनसो मां च साक्षान्महेशम् ॥ ३९ ॥

आश्लिष्येति ।

यदि भक्तिरविच्छिन्ना विप्रवृद्धा निरन्तरा ।
साक्षान्महेश एव स्यात् सर्वद्वैतविवर्जितः ॥ ३९ ॥

दूरस्थः सन् प्रणमति मम प्राणनाथोऽनुरक्तः
पादाम्भोजं स खलु युवयोः सख्युरस्यैव मूर्ध्ना ।
इत्थं पित्रोस्तव सदययोः सम्यगावेदयार्थे !
कुर्याः किञ्चित् त्वमपि नमनं तन्वि! ताभ्यां शिवाभ्याम् ॥

दूरस्थ इति ।

विषयाभिमुखी भक्तिर्विषयेष्वनुरञ्जयेत् ।
ईश्वराभिमुखी भक्तिरीश्वरत्वं प्रयच्छति ॥ ४० ॥

नैवायासं गमयतु भवान् धार्मिके बन्धुकृत्ये
नासीत् कश्चिद् भवदविषयः सर्वभावेषु सौम्य! ।
क्षिप्रं गन्तुं त्वमसि चतुरो वेत्सि सर्वं च तस्मा-
दार्तत्राणं कुरु करुणया तद्धि कृत्यं विभूनाम् ॥ ४१ ॥

नैवायासमिति ।

चित्तायत्ता शिवे भक्तिर्ज्ञानं भक्तिनिबन्धनम् ।
ज्ञानाधीनं च कैवल्यं तस्माच्चित्तं शिवेऽर्पयेत् ॥ ४१ ॥

सर्वं कर्तुं क्षम इति सखे! प्रारभे त्वां नियोक्तुं
कार्येऽन्यस्मिन् गुरुणि करुणां मय्यनाथे कुरुष्व ।
अन्तर्यागे मम पुनरिमामानय त्वं महात्मन्!
यद्वत् सीतां रघुपतिमखे सौम्य! वल्मीकजन्मा ॥ ४२ ॥

सर्वं कर्तुमिति ।

अन्तः प्रविष्टं जन्तूनां प्रत्यगात्मतया शिवम् ।
आराधयाम्यहं भक्त्या त्वं चेच्चित्तानुमोदसे ॥ ४२ ॥

१. 'वि', २. 'यं संश्ले' क. पाठः, ३. 'च नमस्तन्वि' ख. पाठः.

मात्रे नागान्तक इव सुधां स्वर्गलोकात् सपत्न्यै
युद्धे दिव्यौषधमिव मरुन्नन्दनो लक्ष्मणाय ।
शिष्यो दूरादिव च गुरवे दक्षिणां प्राप्तविद्यो
मह्यं भक्तिं सहजसुहृदे शाम्भवीमानय त्वम् ॥ ४३ ॥

मात्र इति ।

निश्शेषदुःखनाशश्च (दुःखापा)ये सुखोदयः ।
सुलभो भक्तियुक्तानामितरेषां सुदुर्लभः ॥ ४३ ॥

संसारार्तप्रियसखसमाश्वासहेतोः सखीभिः
सार्कं शान्त्यादिभिरिह समागच्छ मार्गं सुषुम्नाम् ।
इत्येवं त्वय्युदितवति सा सानुकम्पा तदा त्वा-
मन्वग्यायात् प्रणयभरिता गौरिवात्मीयवत्सम् ॥ ४४ ॥

संसारार्तेति ।

भक्तिमेवानुसन्धत्से यदि त्वं पारमेश्वरीम् ।
अनुग्रहीष्यति त्वासौ वात्सल्येनोपबृंहिता ॥ ४४ ॥

मूलं प्रायः प्रथमकथितं त्वय्युपावर्तमाने
पूर्वं नीता चिगलदमृताकारिणी सौम्य! शक्तिः ।
स्थानाच्छम्भोः सगरतनयश्रेयसे गां पतन्ती
गङ्गा भागीरथमिव विशेदाशु मार्गं त्वदीयम् ॥ ४५ ॥

मूलमिति ।

स नारयोगः कथितः प्रागाग्नेयो विमुक्तिदः ।
सूच्यते सृष्टियोगोऽयं सेव्योऽष्टैश्वर्यसिद्धिदः ॥ ४५ ॥

प्राप्ते मूले परिचर सखे! त्वं सुषुम्नावटस्य
प्राज्ञः पूर्वं मुनिरिव शुको दक्षिणां तत्र मूर्तिम् ।
सम्यग्ज्ञानं तव वितनुयाच्छाम्भवं शाश्वतं या
यत्रोत्पन्ना विलसति परा वैखरी वाग्विभूतिः ॥ ४६ ॥

१. 'त्र', २. 'सौम्य सा' क. पाठः।

प्राप्ते मूल इति ।

एनां सरस्वतीं देवीं पूर्वोक्तां भजसे यदि ।
ज्ञानं त्रिकालविषयं वाक्सिद्धिमपि विन्दसे ॥ ४६ ॥

मूले लिङ्गं महितभुजगीमौलिरत्नायमानं
संसर्पन्त्या शिशिरसुधया द्वादशान्तेन्दुशङ्खात् ।
भक्त्या युक्तस्तव सहजया भूयसैवाभिषिञ्च-
स्तत्तोयेन प्रियसख! तनुं प्लावयित्वा सुखी स्याः ॥ ४७ ॥

मूले लिङ्गमिति ।

एतेनामृतयोगेन षडूर्मिक्लेशवर्जिताः ।
प्राचीना मुनयोऽद्यापि जीवन्ति निरुपद्रवाः ॥ ४७ ॥

धारावर्षे निपतति शिरोमण्डलादुल्बणं ते
हार्दे कुञ्जे किल निवसतां लालितानां त्वयैव ।
आत्मस्थाने प्रियसख! गवां सुप्रचाराय तूर्णं
मोहं गोवर्धनमिव हठादुद्धरन्नच्युतः स्याः ॥ ४८ ॥

धारावर्ष इति ।

गोष्ठीं पशूनां विश्रान्तिस्थानं व्रजकुलौकसाम् ।
सर्वेन्द्रियाणां विश्रान्तिं मूलाधारं विदुर्बुधाः ॥ ४८ ॥

साहाय्यं चेन्मम हि तनुयाः साम्प्रतं त्वं कृपालो!
संसाराख्ये सपदि जलधौ ज्ञानसेतुं निबध्य ।
कामं हत्वा बहुमुखमथ प्रेयसीं तामवाप्स्ये
यद्वत् पूर्वं रघुकुलपतिर्मैथिलीं मान्यशीलाम् ॥ ४९ ॥

साहाय्यमिति ।

कामो बहुमुखः प्रोक्तो गृहक्षेत्रादिगोचरः ।
लङ्केश्वरोऽपि दशभिर्मुखैर्युक्तश्च रावणः ॥ ४९ ॥

न त्यक्ष्यामि क्षणमपि चिरात् संश्रितां तां तु साध्वीं
तस्यां सक्तः सुचिरमनघं स्वाधिराज्यं प्रपत्स्ये ।

१. 'णेऽस्मिन् ह्य' क. पाठः.

श्रद्धां मेधां श्रुतिमपि धृतिं शान्तिदान्ती च मुक्तिं
कृष्णो गोपीजनमिव भजन् निर्वृतस्त्वं च भूयाः ॥५०॥

न त्यक्ष्यामीति ।

स्वर्गादिराज्यं स्वाराज्यं मनुते नहि पण्डितः ।
तदेव तस्य स्वाराज्यं यत्तु साम्राज्यमात्मनः ॥ ५० ॥

आत्मज्ञानामृतमभिमतं जन्मतापोपशान्त्यै
पायं पायं सपदि विसृजन् कृत्यशेषानशेषान् ।
संछिद्याहं मम तदिदमित्यादिसंसारपाशान्
स्वैरं लोके विहर सुचिरं कर्मलेपैरलिप्तः ॥ ५१ ॥

आत्मज्ञानामृतमिति ।

विस्तरेण पुरा प्रोक्तं वेदान्तार्थमशेषतः ।
सुखेन प्रतिपत्त्यर्थं संक्षिप्योपादिशत् कविः ॥ ५१ ॥

इति हंससन्देशे सव्याख्ये उत्तरसन्देशः
समाप्तः ॥

---

शुभं भूयात् ।

---

१. 'भा', २. 'सङ्कल्पाद्यैः कलुषगरलैर्दुष्टसर्पैरदष्टः स्वैरालो', ३. 'शै' ख. पाठः. ४. 'यद्वेदान्तार्थशो' क. पाठः.

## श्लोकानुक्रमणिका।

## स्मृतग्रन्थाद्यनुक्रमणी।

| पृष्ठम् | वाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ७ | ... | ... | बुद्धः |
| ,, | ... | ... | क्षपणकः |
| ,, | ... | ... | कणादः |
| ,, | ... | ... | अक्षपादः |
| ,, | ... | ... | बौद्धाः |
| ८ | ... | बुद्धशास्त्रम् | ... |
| ,, | ... | ... | सौत्रान्तकः |
| ,, | ... | ... | वैभाषिकः |
| ,, | ... | ... | योगाचारः |
| ,, | ... | ... | माध्यमिकः |
| ९ | ... | ... | सौगताः |
| ११ | मध्यमेऽपि हृदयेऽपि | ... | महर्षयः |
| १२ | मूले लिङ्गे च नाभौ | .... | ... |
| १४ | अग्निर्ज्योतिरहःशुक्लः | भगवद्गीता | ... |
| ,, | धूमो रात्रिस्तथा कृष्णः | ,, | ... |
| ३५ | मनुष्याणां सहस्रेषु | ,, | ... |
| ,, | पार्थ! नैवेह नामुत्र | ,, | ... |

# LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnanaprabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

---

## Trivandrum Sanskrit Series.

| | | | |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ **Abhinavakaustubhamala and Daksinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alaṅkāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*). | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | Rs. | As. | P. |
|---|---|---|---|
| No. 9—विरूपाक्षपञ्चाशिका **Virupaksapancasika** (Vedānta) by Virūpākṣanātha with the commentary of Vidyācakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—मातङ्गलीला **Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् **Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—नीतिसारः **Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nāṭaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् **Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancharatra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*out of stock*). | 4 | 0 | 0 |
| No. 19—मानमेयोदयः **Manameyodaya** (Mīmāmsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—अविमारकम् **Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—बालचरितम् **Balacarita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारो-रुभङ्गानि Madhyamavyayoga-Duta-vakya-Dutaghatotkaca-Karna-bhara and Urubhanga (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः Nanartharnavasam-ksepa (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः Janakiparinaya (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका Kanadasiddhanta-candrika (Nyāya) by Gaṅgādhara-sūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् Abhisekanataka by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः Kumarasambhava (Kāvya) by Kālidāsa with the two comment-aries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः Vaikhanasadharmapra-sna (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः Nanartharnavasam-ksepa (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या Vastuvidya (Śilpa) (*out of stock*). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः Nanartharnavasam-ksepa (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः Kumarasambhava (Kāvya) by Kālidāsa with the two comment-aries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—वाररुचसंग्रहः **Vararucasangraha** (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—मणिदर्पणः **Manidarpana** (Nyāya) by Rājacūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः **Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāsikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् **Asaucastaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् **Carudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् **Alankarasutra** by Rājānaka Ruyyaka with the Alaṅkārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् **Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Sankara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् **Pratimanataka** by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghaṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् **Tantrasuddha** by Bhaṭṭāraka Vedottama. | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—प्रपञ्चहृदयम् **Prapancahrdaya.** | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः **Paribhasavrtti** (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् **Sidhantasiddhanjana** (Vedānta) by Kṛṣṇānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—सिद्धान्तसिद्धाञ्जनम् **Do.** Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका **Goladipika** (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः **Rasarnavasudhakara** (Alaṅkâra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghaṭîya Sarvânanda (Part IV, 3rd Kâṇḍa). | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः **Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः **Sphotasiddhi-nyayavichara** (Vyâkaraṇa). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् **Mattavilasaprahasana** (Nâṭaka) by Mahendravikrama-varman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका **Manusyalayaca-ndrika** (Śilpa) (*out of stock*). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् **Raghuviracarita** (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatî (Part III). | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 59—**नागानन्दम् Nagananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinî of Śivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—**लघुस्तुतिः Laghustuti** by Laghubhaṭṭâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 61—**सिद्धान्तसिद्धाञ्जनम् Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—**सर्वमतसंग्रहः Sarvamatasangraha.** | 0 | 8 | 0 |
| No. 63—**किरातार्जुनियम् Kiratarjuniya** (Kâvya) by Bhāravi with the commentary Sabdârthadîpikā of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—**मेघसन्देशः Meghasandesa** by Kâlidāsa with the commentary Pradīpa of Dakṣiṇâvartanātha. | 0 | 12 | 0 |
| No. 65—**मयमतम् Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66—**महार्थमञ्जरी Maharthamanjari** (Darśana) with the commentary Parimala of Maheśvarânanda. | 2 | 4 | 0 |
| No 67—**तन्त्रसमुच्चयः Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śankara (Part I, 1–6 Paṭalās) (*out of stock*). | 3 | 4 | 0 |
| No. 68—**तत्त्वप्रकाशः Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadîpikâ of Śrī Kumāra. | 1 | 12 | 0 |
| No. 69—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Īśânaśivagurudevamiśra (Part I, Sâmānyapâda). | 1 | 8 | 0 |
| No. 70—**आर्यमञ्जुश्रीमूलकल्पः Aryamanjusrimulakalpa** (Part I). | 2 | 8 | 0 |
| No. 71—**तन्त्रसमुच्चयः Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śaṅkara (Part II, 7—12 Paṭalās) (*out of stock*). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 72—**ईशानशिवगुरुदेवपद्धतिः Isanasivaguru-devapaddhati** (Tantra) by Īśānaśiva-gurudevamiśra (Part II. Mantrapāda). | 4 | 0 | 0 |
| No. 73—**ईश्वरप्रतिपत्तिप्रकाशः Isvarapratipatti-prakasa** (Vedānta) by Madhusūdana-sarasvatī. | 0 | 4 | 0 |
| No. 74—**याज्ञवल्क्यस्मृतिः Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya. (Part I — Âcâra and Vyavahâra Adhyâyās). | 3 | 4 | 0 |
| No. 75—**शिल्परत्नम् Silparatna** (Śilpa) by Śrī-kumâra (Part I). | 2 | 12 | 0 |
| No. 76—**आर्यमञ्जुश्रीमूलकल्पः Aryamanjusrimula-kalpa** (Part II). | 3 | 0 | 0 |
| No. 77—**ईशानशिवगुरुदेवपद्धतिः Isanasivaguru-devapaddhati** (Tantra) by Iśānaśiva-gurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalās). | 3 | 0 | 0 |
| No. 78—**आश्वलायनगृह्यसूत्रम् Asvalayanagrhya-sutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—**अर्थशास्त्रम् Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I — 1 & 2 Adhikaraṇās). | 3 | 12 | 0 |
| No. 80—**अर्थशास्त्रम् Do.** Do. (Part II—3—7 Adhikaraṇās). | 4 | 0 | 0 |
| No. 81—**याज्ञवल्क्यस्मृतिः Yajnavalkyasmrti** with the commentary Bâlakrīḍa of Viśva-rūpācārya (Part II. Prâyaścit-tâdhyâya). | 2 | 0 | 0 |
| No. 82—**अर्थशास्त्रम् Arthasastra** of Kauṭalya with commentary by Mahāmahopā-dhyāya T. Gaṇapati Śāstri (Part III, 8—15 Adhikaraṇās). | 3 | 4 | 0 |
| No. 83—**ईशानशिवगुरुदेवपद्धतिः Isanasivaguru-devapaddhati** (Tantra) by Īśāna-śivagurudevamiśra (Part IV, Kriyā-pāda 31-64 Paṭalās and Yogapāda). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 84—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part III). | 2 | 0 | 0 |
| No. 85—विष्णुसंहिता **Visnusamhita** (Tantra) | 2 | 8 | 0 |
| No. 86—भरतचरितम् **Bharatacarita** (Kâvya). by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—सङ्गीतसमयसारः **Sangitasamayasara** (Sangīta) of Sangītâkara Pârśvadeva. | 1 | 2 | 0 |
| No. 88—काव्यप्रकाशः **Kavyaprakasa** (Alankâra) of Mammaṭabhaṭṭa with the two commentaries the Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sâhityacûdâmaṇi of Bhaṭṭagopâla (Part I, 1–5 Ullâsās). | 3 | 0 | 0 |
| No. 89—स्फोटसिद्धिः **Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—मीमांसाश्लोकवार्त्तिकम् **Mimamsaslokavartika** with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—होराशास्त्रम् **Horasastra** of Varāhamihirācarya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—रसोपनिषत् **Rasopanisat.** | 2 | 0 | 0 |
| No. 93—वेदान्तपरिभाषा **Vedantaparibhasa** (Vedānta) of Dharmarājādhvarīndra with the commentary Prakāśikā of Peddādīkṣita. | 1 | 8 | 0 |
| No. 94—बृहद्देशी **Brihaddesi** (Sangīta) of Matangamuni. | 1 | 8 | 0 |
| No. 95—रणदीपिका **Ranadipika** (Jyotiṣa) of Kumāragaṇaka. | 0 | 4 | 0 |
| No. 96—ऋक्संहिता **Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya (Part I, 1st Adhyāya in 1st Aṣṭaka). | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 97—नारदीयमनुसंहिता **Naradiyamanusamhita** (Smṛti) with Bhāṣya of Bhavasvāmin. | 2 | 0 | 0 |
| No. 98—शिल्परत्नम् **Silparatna** (Śilpa) by Śrīkumāra. | 2 | 8 | 0 |
| No. 99—मीमांसाश्लोकवार्त्तिकम् **Mimamsasloka-vartika** (Mīmāmsa) with the commentary Kāśikā of Sucaritamiśra (Part II). | 2 | 0 | 0 |
| No. 100—काव्यप्रकाश: **Kavyaprakasa** (Alaṅkāra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāsinī of Śrīvidyācakravartin and Sāhityacūḍāmaṇi of Bhaṭṭagopāla. (Part II, 6—10 Ullāsās). | 5 | 0 | 0 |
| No. 101—आर्यभटीयम् **Aryabhatīya** (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part I. Gaṇitapāda). | 2 | 8 | 0 |
| No. 102—दत्तिलम् **Dattila** (Saṅgīta) of Dattilamuni. | 0 | 4 | 0 |
| No. 103—हंससन्देशः **Hamsasandesa** (Vedānta) with commentary. | 0 | 8 | 0 |

***Apply to:—***

*The Curator*
*for the publication of Sanskrit Manuscripts,*
*Trivandrum.*

## In the Press.

1. Bālamārtāṇḍavijaya (Nāṭaka) of Devarâja Kavi.
2. Prakriyāsarvasva (Vyākaraṇa) of Nârâyaṇa Bhaṭṭa with commentary.
3. Sāmbapañcāśikā (Stuti) with commentary.
4. Haramekhalā (Vaidyaka) of Māhuka with commentary.
5. Ṛksamhitā with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhava (Part II).
6. Sâhityamīmâmsâ (Alaṅkāra).
7. Kāvyaratna (Kāvya) of Arhaddāsa.
8. Nidhipradīpa of Siddhaśrikaṇṭhaśambhu.
9. Vaikhānasāgama by Marīci.
10 Nyāyasārapadapañcikā (Nyāya) of Vāsudeva.
11. Arthaśâstra of Kauṭalya with commentary in Malayalam.

---

## Undertaken for Publication.

1. Āśvalâyanagṛhyasūtra with Devasvâmin's Bhāṣya.
2. Pramâṇalakṣaṇa (Mìmâmsâ) of Sarvajñâtmapâda.
3. Sarasvatīkaṇṭhâbharaṇa (Vyâkaraṇa) of Bhoja with the Vṛtti of Nârāyaṇa Daṇḍanâtha.
4. Śiśupālavadha (Kāvya) with commentary of Devarāja.
5. Saṅgrāmavijayodaya.
6. Śukasandeśa (Kāvya) with commentaries of Dharmagupta Gaurīdāsa and Kerala Varma Deva.
7. Pāṇinīyalaghuvivṛti (Vyākaraṇa)
8. Vākyapadīya (Vyākaraṇa) with Prakîrṇakaprakâśa of Helârâja.
9. Nāradīyapaddhati (Tantra) with commentary Vivaraṇa of Murāri.

---

